# श्रीरामजन्मभूमि स्तोत्रम्

दिव्यभूमावयोध्यायां
यत्र जातो हरिः स्वयं।
सीतारामप्रियां नित्यां
जन्मभूमिं नमाम्यहम्॥१॥

या महाशक्तिनारायणी मङ्गला
या वराहोद्धृता ब्रह्मरुद्रार्चिता
या विदेहे पुरे जानकीजन्मदा
तां रामजन्मभूमिं भजे सर्वदा॥२॥

या व्रजे श्रीकृष्णराधाप्रदा प्राणदा
याऽस्ति सर्वेशहृत्संस्थिता भूतिदा।
याऽस्ति विश्वम्भराऽम्बा जगत्पावनी
तां रामजन्मभूमिं भजे सर्वदा॥३॥

याऽखिलाधारभूताऽस्ति लोकाधिपा
या जगत्पालनी या च सर्वंसहा
याऽस्ति ब्रह्मेन्द्ररुद्रादिभिर्वन्दिता
तां रामजन्मभूमिं भजे सर्वदा॥४॥

वृक्षभूभृल्लतासिन्धुगङ्गादिभि-
भूंषितेक्ष्वाकुभूपादिभिः सेविता।
सर्वशस्या धरित्री रसा याऽचला
तां रामजन्मभूमिं भजे सर्वदा॥५॥

उत्तरे दिव्यसर्युप्रवाहान्विता
देववेदर्षिपित्रादिभिर्या नुता
रत्नगर्भा वरेण्या सुभाग्यप्रदा
तां रामजन्मभूमिं भजे सर्वदा॥६॥

श्रीमद्रामजन्मभूमिस्तोत्रं शुभदर्शनोदितं।
सीतारामप्रमोदार्थं पठेन्नित्यं तदाप्तये॥७॥

॥ इति आचार्य पण्डित शुभदर्शनविरचितं
श्रीरामजन्मभूमिस्तोत्रं सम्पूर्णं॥



आचार्य पं० शुभ दर्शन
ज्योतिषाचार्य • तंत्राचार्य
काशी हिन्दू विश्वविद्यालय(BHU), वाराणसी
9801630444
sdjyotishkendra@gmail.com